धं॰ कं॰ प्र॰
९८

अप्रतिपन्निर्णये वक्ष्यते । अथ धनदाय नमस्तुभ्यं निधिपद्माधिपाय च भवंतु त्वत्प्रसादान्मे धनधान्यादिसंपदः इति धनद
प्रार्थना अथैतेन स्यान्निर्णयः इयं प्रदोषार्द्धरात्रिव्यापिनी ग्राह्या तेनेयं पूर्वविद्धा प्रशस्ता तदुक्तम् दीपावलीं चेत्कुर्वीत प्रा
तिपन्मिश्रितां क्वचित् तत्र श्रीरिति विनश्यंति प्रजा गावो वसूनि च तथाभूतेन विद्धेनो कार्यं दर्शपूर्वे कदाचनेति प्रदोष
व्यापिनी ग्राह्या कार्त्तिके दीपमालिके ति वचनाद्भूतविद्धैव ग्राह्येत्यर्थः प्रतिपन्मिश्रिता याति वैधात् पूर्वदिने प्रदो
षव्याप्तौ सत्यां प्रदोषार्द्धरात्रौ व्याप्तिरजस्वा तदभावे प्रदोषव्याप्तिः प्रदोषसमये राजन्कर्तव्या दीपमालिकेत्य
स्या विशेषोपादानाच्च उक्तसमये श्राद्धं प्रदोषे दीपमालिका एष क्रमः पूर्णतिथौ खंडतिथौ तु तत्कालव्याप्तिनि
र्देशात् तत्क्रमविधानमित्यनवद्यम् इति दीपावलीनिर्णयः ॥ अथ माघमासस्यामावास्यायां सावित्रीयुतं
कुलालं समभ्यर्च्य नवनीतघटदानं कुर्यात् तदुक्तं भविष्योत्तरे अमायां माघमासस्य पूजयित्वा पितामहम् गा
यत्र्या सहितं देवं वेदवेदांगभूषितम् नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् सहिरण्यां सवस्त्रां च ब्राह्मणाय नि
वेदयेत् इति अस्यां शतभिषग्नक्षत्रयुक्तायां श्राद्धकृते पितॄणामक्षय्या तृप्तिर्भवति विष्णुपुराणे माघासिते पंचद
शी कदाचिदुपैति योगं यदि वारुणेन ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ इति इयमेव पू
र्वाभाद्रपदायुक्ता चेत् तदा श्राद्धकृते पितॄणां सहस्रयुगपर्यंता तृप्तिर्भवति तदुक्तम् तत्रैव चेद्भाद्रपदास्तु पू
र्वाः काले यदा यान्ति क्रियते पितृभ्यः श्राद्धं परां तृप्तिमवाप्नुवन्ति युगं सहस्रं पितरः प्रसन्ना इति इयमेव धनिष्ठायुता चेत्त
दा श्राद्धे कृते पितॄणां वर्षायुतं तृप्तिर्भवति तथा च महाभारते कालेधनिष्ठा यदि नाम तस्मिन्भवेच्च भूपाल तदा
पितृभ्यः दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैरिति अथार्धोदयः कालः प्रकाश्यते माघपौ
षमासयोरमावास्या सूर्यवारश्रवणर्क्षव्यतीपातयोगयुक्ता यदि स्यात्तदा कोटिसूर्यग्रहणतुल्यो सावर्द्धोदया

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

देयाः तदुक्तम् दीपदानं यथाशक्ति विप्रमित्रसुरालये चतुष्पथे स्मशाने च नदीपर्वतगोगृहे अपराह्णे प्रकर्तव्यं
श्राद्धं पितृपरायणैः प्रदोषसमये राजन्कर्तव्या दीपमालिके ति क्रमतः प्रदोषो रजनीमुखं घटिकाद्वयं स्मृतः रात्रिः
अत्र दीपदानं काम्यम् तदुक्तं भविष्ये कार्त्तिके मास्यमावास्यायां यो दीपदानकम् शालायां ब्राह्मणः कुर्यात्स
गच्छेत्परमं पदमिति अत्रादित्यपुराणे विशेष उक्तः दीपदानानंतरं लक्ष्मीं प्रबोधयेत् अभयं प्राप्य विष्णोश्च वि
ष्णुभीताः सुरद्विषां सुप्ताः क्षीरोदधौ ज्ञात्वा लक्ष्मीः पद्माश्रिता स्थिता अप्रबुद्धे हरौ पूर्वं स्त्रीभिर्लक्ष्मीः प्रबोध्यते दे
वीपुराणे लक्ष्मीप्रबोधनमंत्रः ॐ त्वं ज्योतिः श्री रविश्चंद्रो विद्युत्सौवर्णतारकाः सर्वेषां ज्योतिषां ज्योतिर्दीपज्योतिः
स्थिते नमः इत्यनेन मंत्रेण दीपहस्ताभिः स्त्रीभिर्लक्ष्मीः प्रबोध्यते ततो भोजनं कुर्यात् प्रदोषसमये लक्ष्मीं पूजयित्वा
सुते क्रियः नारी वा वत्सरं यावत्तल्लक्ष्म्या परिहीयते प्रातर्गोवर्धनः पूज्यो द्यूतं रात्रौ प्रवर्तयेत् इति वचनात् रात्रौ
अमावास्यायामपि द्यूतं समाचरेत् तथा प्रतिपदि तु प्रातः तत्र तस्य रात्रावविहितत्वात्प्रातर्गोवर्धनः पूज्य इति प्रति
पत्परं प्रतीयते अथ द्यूताभिमंत्रितो विजयालक्ष्मीपूजायां च मंत्रः ॐ या लक्ष्मीर्दिवसे पुण्ये दीपावल्यां च भूतले
गवां गोष्ठे च कार्त्तिक्यां सा लक्ष्मीर्वरदा मम शंकरश्च भवानी च क्रीडया द्यूतमास्थितौ भवान्या च जिता लक्ष्मीः स्मा
वर्जितः शिव इति अत्रार्द्धरात्रे लक्ष्मीर्गृहानाश्रयितुं परिभ्रमति तदुक्तं ब्राह्मे अर्द्धरात्रे भ्रमत्यत्र लक्ष्मीराश्रयितुं
गृहान् ततः स्वलंकृता लिप्ता दीपैर्माल्यैर्जनोत्सवः सुधाधवलिताः कार्याः पुष्पमालोपशोभिताः माल्यानुलेप
नैर्दद्याल्लक्ष्मीप्रीतिप्रदं द्विजे नूतनवस्त्रभूषणानि स्त्रीपुरुषोपरिदधाने किंच [illegible]दयिनाभिश्च सहितैर्नेया
सा सकला निशा नवैर्वस्त्रैश्च संपूज्य द्विजेसं बंधिबांधवान् ॐ बलिराज नमस्तुभ्यमिति बलिराजाय दीपदानमं

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ॐ॰ ॐ चं॰ग्र॰ कामम् आश्विने शरद्यां ग्रहणं श्रेष्ठं श्रेष्ठफलदं च भवति नर्मदागंगारेवासरस्वत्यः सर्वमासेषु ग्रहे शुभदाः अत्रन
१·२ द्यादौ रात्रिश्च पित्र्यविप्रस्नानव्यम् न स्नानमाचरेद्धीमानातुरेन महानिशि न वासोभिः सहजस्रं नाविज्ञाते ज
लाशये इति नित्यस्नाननिषेधो नैमित्तिकं निषेद्धुं न शक्यम् स्नानं तु द्विजातीनां समंत्रकं सफलम् शूद्राणां नमस्का
रमंत्रेणाप्लवनमात्रमिति कूपनारायणाभिमतं कूपस्नाने ग्रहणसमये पात्रे उद्धृतेनासंभवे अद्भुपात्रेस्थिता
लापः पात्रांतरनिधापिताः अनुष्णास्तु ताज्ञेयाः सर्वकर्मसु पावनाः अनुष्णाभिरद्भिः स्वर्णपूताभिः सर्वत्र
स्नानं शस्तम् उष्णोदकस्नाने मंत्रनिवृत्तिः स्वतेनवाहरणं स्नानं मुख्यं तदभावे नित्यस्नानवदाग्रेपाद्यपि तथा
च सप्तम्यंतरे मृते जन्मनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणेति वृद्धजलसंपत्तौ
आब्रह्मस्तंभपर्यंता देवर्षिपितृमानवाः तृप्यंतु पितरः सर्वे मातृमातामहादयः इत्यनेन जलांजलिं दद्यात्
अप्रकरणात्करणं वरमिति न्यायात्तर्पणांते गायत्रीजपः छंदोगानां प्राणायामं च तर्पणमिति पूर्वमुक्तम् प्रा
णायामग्रहणांते संध्योपासननिषेधः यस्मिंस्तिस्र एव संध्यां नित्यकालउपास्य संध्यायां चेद्ग्रहणं तदानात्कालि
कीं संध्यामुपासीत व्याहृतिशब्देन व्यस्ताः समस्ता अनस्तु महाव्याहृतिशब्देन व्यस्तास्तिस्र एव ग्राह्या इत्याहुः
अत्र ग्रहणे तु यत्र श्राद्धावकाशो नास्ति तत्रापरपितृनुद्दिश्य पिंडदानमपि कार्यम् पितापितामहश्चैव तथैव
प्रपितामहः मातामहप्रमातामहस्तथा वृद्धादिकस्तु सः तेभ्यः पिंडं समर्पयेद नस्ववेद्यप्रतिष्ठितानामिति सर्वत्र
श्राद्धानवकाशे पिंडानेव दद्यात् केचिदित्याहुः ननु संध्यानिशीथयोर्दोषश्राद्धनिषेधात्कथं कार्यं सत्यं वचनसाम
र्थ्यात् तथाहविष्णुः संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शन
मिति अत्र भूम्यादिदानेषु शक्त्यनुसारेण दद्यात् तदुक्तं महाभारते भूमिर्गावः सुवर्णं च धान्यं वा यद्यदिष्टं।

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

त् ब्रह्मपुराणे तिस्रो नद्यो महापुण्या वेण्णा गोदा च जाह्नवी कृष्णवेण्णा च गोदा च पापघ्ने गंगेति कथ्यताम् गोहरी
शां गतः प्राप्ता गंगा इति हि कीर्तिता देवीपुराणे यः सूर्ये सिंहकेमेन ग्रस्ते रेवाजले नरः स्पृशंति चावगाहंते न
ते प्रकृति मानवाः श्रुत्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलं स्पृष्ट्वा गोमेधजं पुण्यं पीत्वा सोत्रामणिं लभेत् स्नात्वा
श्वमेधजं पुण्यं प्राप्नुवान विचारतः रविचंद्रोपरागे च अयने चोत्तरे तथा एवं गंगापि दृष्टव्या तद्देवसरस्वती
तयोरेव रेखुद्दे त्रेषु यत्पुण्यं समुदाहृतं तदत्र फलमाहात्म्यमुपरागेऽधिकं भवेत् इति ऊर्ध्वरादयः पुण्यदेशाः
मत्स्यपुराणे च गंगा कनखले पुण्या प्रयागे पुष्करे गया कुरुक्षेत्रे तथा पुण्यं राहुग्रस्ते दिवाकरे एतदसंभवेना
स्वापनदीषु वापीषु कूपतडागादिष्वपि यथासन्निहितेषु स्नायात् तदुक्तं कर्मप्रदीपे सर्वे नंदसमा नित्सुः स
र्वीपुण्यं भान्ति भूतले कूपस्थान्यपि चैवार्कग्रहणे नात्र संशयः सर्वे नीगंगा वापीकूपतडागेषु परिप्रश्रवणेषु च
नद्यो नदे देवखाते सरसी ध्रुतिः श्रुतिः उष्णोदकेन वा स्नायाद्ग्रहणे चंद्रसूर्ययोः उष्णोदकस्नानमचान्तरवि
षयम् यदाह व्याघ्रः आदित्यकिरणैः पूतं पुनः पूतं च वह्निना अतो व्याध्यातुरः स्नायाद्ग्रहणे चंद्रसूर्ययोरि
ति अवश्यं स्नातव्यमकरणे प्रत्यवायः श्रूयते लिंगपुराणे चंद्रसूर्यग्रहे स्नायान्मृतके सूतके पिवा अस्नायी मा
त्युमाप्नोति स्नायी मृत्युं न विंदति एतदपि अत्यातुरेतरविषयमेव वचनम् अथात्र मासविशेषेण तीर्थवि
शेष उच्यते तदुक्तं देवीपुराणे कार्तिके ग्रहणं श्रेष्ठं गंगायमुनसंगमे इत्यादि वाक्यैरुक्तः सविस्तरमिमं
दिप्याल रव्यं । मार्गशीर्षे देविकायां पुण्यम् पौषे नर्मदायां पुण्यम् माघे सन्निहत्यां ग्रहणं पुण्यम् फाल्गुने वरु
णायां चैत्रे सरस्वत्याम् वैशाखे चंद्रभागायाम् ज्येष्ठे कौशिकाम् आषाढे तायाम् श्रावणे सिंधौ भाद्रे गंड

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ग्र्यप्रसंगादितिसिद्धम् अथ ग्रहणे भोजननिर्णयः स्मृत्यंतरे नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ग्रहकाले
तु नाश्नीयात्स्नात्वाश्नीयाच्च मुक्तयोः मुक्ते शशिनि भुंजीत यदि न स्यान्महानिशा स्नात्वा दृष्ट्वा परेन्ह्यद्यात् ग्रस्ता
स्तमितयोस्तयोः गार्ग्योपि संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ तदहर्नैव भुंजीत रात्रावपि कदाचनेति
शशिनि ग्रस्तास्ते अहर्नैव भुंजीत रात्रावपीत्यर्थः कदाचनेति पौर्णमास्यादिव्रतस्यापि नित्यनैमित्तकाम्यो
पवासव्रतस्यापि च निषेध इति कालादर्शे महानिशा त्र सार्धप्रहरानंतरं मुहूर्तचतुष्टयमिति कल्पतरुः रात्रे
स्सार्धयाममध्ये भोजनाधिकार उक्तः द्विरष्टानेत्यत्र प्रयोगः ब्रह्मपुराणे नाश्नीयाद्यतत्काले ग्रस्तयो
श्चंद्रसूर्ययोः मुक्तयोस्तु कृतं स्नानं पश्चाद्भुंज्यात्स्ववेश्मनीति परगृहे भोजननिषेधः चंद्रग्रहणे प्रहरात्पूर्वं
प्रहरत्रयेन भोक्तव्यं प्रहरत्रयमध्य इत्यर्थः सूर्यग्रहणे प्रहरात्पूर्वं वर्तमानप्रहरचतुष्टयेन भोक्तव्यं अतश्चं
द्रग्रहणे दिवा भोजनप्राप्तिः सूर्यग्रहणे रजन्याम् तथा च विश्वादर्शे चंद्रार्कग्रहपर्वतत्राक्त्रिःचतुःप्रहरं का
मात् भुक्त्वा ग्रस्तास्तयोर्विकिंदृष्ट्वाद्यात्स्नानपूर्वकमिति तथा नाद्यात्सूर्यग्रहाद्यामादर्वाग्यामचतुष्टयम्
चंद्रग्रहात्त्रियामं तु बालवृद्धातुरान्विना अन्यच्च सूर्यग्रहे यामचतुष्टयं प्राक् यामत्रयं पर्वणि शीतरश्मेः संव
र्जयेद्भोजनयानपानमंगल्यकर्माभ्यसनादिकं पयः पद्मपुराणे अर्धरात्रादधश्चोर्ध्वं यदा चंद्रग्रहो भवेत्
पूर्वे पूर्वत्र भोक्तव्यमुत्तरे चोत्तरेऽपि चेति पूर्वत्र पूर्वोक्ते उत्तरे उत्तरत्रेत्युक्ते च विशेषोपि ग्रहणं तु भवेदिंदोः प्रथ
मादधियामतः भुंजीतावर्तनात्पूर्वं पश्चिमे प्रथमादधः अस्यार्थः निशि प्रथमयामादुपरि चंद्रग्रहे सति
आवर्तनात्मध्यान्हात्पूर्वं भुंजीत रात्रिपश्चिमयामे चेत् तदा रात्रिप्रथमयामादधो भुंजीत ग्रहणयामात्पू
र्वयामत्रयं त्यजेदित्यर्थः मनुः ग्रहणमुक्तिमथो दृष्ट्वा स्नात्वाद्याद्यपरेऽहनीति अन्ही तिथिपरं ज्ञेयम् याउ

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA